# चम्पूरामायणे

# बालकाण्डम्

०७ – ११.१२.२०१७

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- अस्ति प्रशस्ता – अयोध्यायाः वर्णनम्
- तामावसद्दशरथः – दशरथस्य वर्णनम्
- अथास्मिन्ननपत्यतया – दुःखितं दशरथं प्रति सुमन्त्रस्य कथनम्
- सोऽपि सुमन्त्रवचनात् – दशरथेन अश्वमेधस्य पुत्रकामेष्ट्याः च विधानम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- पुत्रकामेष्टियज्ञे हविः स्वीकर्तुम् आगताः देवाः ब्रह्माणं पुरस्कृत्य वैकुण्ठं गच्छन्ति, रावणाद् रक्षणं प्रार्थयितुम्

tadanu slide logo: vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- तदनु, हविर्-आहरणाय, धरणौ, कृत-अवतरणाः, सर्वे, गीर्वाण-गणाः, शतमख-प्रमुखाः, चतुर्मुखाय, दशमुख-प्रताप-ग्रीष्म-ऊष्म-सम्प्लोषणम्, आवेद्य, तेन, सह, शरणम्, इति, शार्ङ्गधन्वानम्, मन्वानाः, नाना-विध-प्रस्तुत-स्तुतयः, क्षीर-अम्बु-राशिम्, आसेदुः

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- तदनु = तदनन्तरम्, दशरथे पुत्रकामेष्टिं कुर्वति
- हविराहरणाय = हविर्भागस्य स्वीकाराय
- धरणौ = भूमौ
- कृतावतरणाः = प्राप्ताः

(धरणौ, कृतावतरणाः) स्वर्गात् भूलोकं प्रति अवतीर्णाः

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- सर्वे = निखिलाः
- गीर्वाणगणाः = देवसमूहाः
- शतमखप्रमुखाः = इन्द्राद्याः
- चतुर्मुखाय = ब्रह्मणे

vyoma ॥ वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- दशमुख... = दशमुखस्य = रावणस्य यः प्रतापः = पराक्रमः स एव ग्रीष्मोष्मा = निदाघजनितम् औष्ण्यम्, तेन यत् सम्प्लोषणम् = दाहः, तम् । रावणस्य पराक्रमः ग्रीष्मकालस्य आतप इव सर्वान् दहति इत्यर्थः ।
- आवेद्य = विज्ञाप्य
- तेन सह = ब्रह्मणा साकम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- शार्ङ्गधन्वानम् = शार्ङ्गनामक-धनुर्धरम् श्रीमहाविष्णुम्
- शरणम् इति = रक्षिता इति
- मन्वानाः = अवबुध्यमानाः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- नाना... - नानाविधाः = बहुप्रकारकाः, प्रस्तुताः = तत्कालोचिताः/उपक्रान्ताः स्तुतयः = स्तोत्राणि येषाम्, तादृशाः
- क्षीराम्बुराशिम् = दुग्धसमुद्रम्
- आसेदुः = प्रापुः

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- तात्पर्यम् – दशरथस्य पुत्रकामेष्टौ हविर्भागं स्वीकर्तुम् आगताः इन्द्राद्याः देवाः चतुर्मुखब्रह्मणे रावणपराक्रमेण दन्दह्यमानं विश्वं विज्ञाप्य, तमेव पुरस्कृत्य रक्षणार्थं महाविष्णुं प्रार्थयितुं क्षीरसमुद्रं प्राप्य विविधैः स्तुतिभिः नारायणं प्रार्थयामासुः ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । भागप्रतिग्रहार्थं वै समवेता यथाविधि ॥
- ताः समेत्य यथान्यायं तस्मिन् सदसि देवताः । अब्रुवन् लोककर्तारम् ब्रह्माणं वचनं ततः ॥
- भगवन् त्वत्प्रसादेन रावणो नाम राक्षसः । सर्वान् नो बाधते वीर्यात् शासितुं तं न शक्नुमः ॥

(बाल १५.४,५,६)

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः । शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ॥
- ब्रह्मणा च समागम्य तत्र तस्थौ समाहितः । तमब्रुवन् सुराः सर्वे समभिष्टूय संनताः ॥
- त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया ।
- तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् । अवध्यं दैवतैर्विष्णो समरे जहि रावणम् ॥

(बाल १५.१६,१८,२१)

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- हविराहरणाय = हविषः आहरणम्, तस्मै । अकारान्तः, नपुं, ४.१
- धरणौ – इकारान्तः, स्त्री, ७.१ । "धरा धरित्री धरणिः क्षोणिः ज्या काश्यपी क्षितिः"
- कृतावतरणाः – कृतम् अवतरणं यैः ते

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- शतमखप्रमुखाः – शतं मखाः यस्य सः शतमखः । "यज्ञः सवोऽध्वरो यागः सप्ततन्तुः मखः क्रतुः" (अमरः) । शतमखः प्रमुखः येषां ते ।
- दशमुख... – दश मुखानि यस्य सः । दशमुखस्य प्रतापः । ग्रीष्मस्य ऊष्मा । दशमुखप्रताप एव ग्रीष्मोष्मा । दश..ऊष्मणः सम्प्लोषणम् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसम्प्लोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।

- शार्ङ्गधन्वानम् – शार्ङ्गं धनुः यस्य सः । नकारान्तः पुं, २.१ ।
- मन्वानाः – "मनु अवबोधने" + शानच् (कृत्) – अकारान्तः, पुं, १.३
- आसेदुः – आ+ "षद्लृ विशरणे" – लिट्, प्रथम.३

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम्
लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम्
कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- महाविष्णोः वर्णनम्

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम् लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम् कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- सन्ताप-घ्नम्, सकल-जगताम्, शार्ङ्ग-चाप-अभिरामम्, लक्ष्मी-विद्युत्-लसितम्, अतसी-गुच्छ-सच्छाय-कायम्, वैकुण्ठ-आख्यम्, मुनि-जन-मनस्-चातकानाम्, शरण्यम्, कारुण्य-अपम्, त्रिदश-परिषत्, काल-मेघम्, ददर्श
- ददर्श = अपश्यत्
- का ददर्श? त्रिदशपरिषत् = देवानां गोष्ठी

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam · Value Education · Technology

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम् लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम् कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- किं ददर्श? कालमेघम् = नीलाम्बुदम्
- कीदृशं कालमेघम्? सकलजगतां सन्तापघ्नम्, शार्ङ्गचापाभिरामम्, लक्ष्मीविद्युल्लसितम्, अतसीगुच्छसच्छायकायम्, वैकुण्ठाख्यम्, मुनिजनमनश्चातकानां शरण्यम्, कारुण्यापम्
- सकलजगताम् = सर्वेषां लोकानाम्
- सन्तापघ्नम् = दुःख-नाशकम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम् लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम् कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- शार्ङ्गचापाभिरामम् = शार्ङ्गनामकेन धनुषा मनोज्ञम्
- लक्ष्मीविद्युल्लसितम् – लक्ष्मीः = श्रीः, सा एव विद्युत् = सौदामिनी, तया लसितम् = श्लिष्टम्
- अतसी... – अतसी = क्षुमाख्यः वृक्षविशेषः, तस्य गुच्छम् = पुष्पस्तबकम् । अतसीगुच्छेन समाना छाया = कान्तिः यस्य, तादृशः कायः = देहः यस्य तम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम् लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम् कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- वैकुण्ठाख्यम् = वैकुण्ठनामकम्
- मुनिजन... – मुनिजनानां मनांसि एव चातकाः = पक्षिविशेषाः, तादृशानाम्
- शरण्यम् = रक्षकम्
- कारुण्यापम् – कारुण्यम् = दया एव आपः = जलम् यस्य तादृशम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम् लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम् कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- कालमेघः – तापं हरति, इन्द्रचापः, विद्युत्, श्यामलः, चातकानां शरण्यः, जलपूरितः
- वैकुण्ठाख्यः कालमेघः – सकलजगतां सन्तापघ्नः, शार्ङ्गचापः, लक्ष्मीविद्युत्, श्यामलः, मुनिजनमनश्चातकानां शरण्यः, कारुण्यरूप-जलपूरितः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम् लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम् कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- अन्वयः – त्रिदशपरिषत् सकलजगतां सन्तापघ्नं, शार्ङ्गचापाभिरामं, लक्ष्मीविद्युल्लसितम्, अतसीगुच्छसच्छायकायं, मुनिजनमनश्चातकानां शरण्यं, कारुण्यापं, वैकुण्ठाख्यं कालमेघं ददर्श ।
- तात्पर्यम् – देवगोष्ठी वैकुण्ठं प्राप्य नारायणं ददर्श । सः नारायणः सर्वलोकानां दुःखनाशकः, शार्ङ्गनामकेन धनुषा मनोज्ञः, लक्ष्मीरूपविद्युता युक्तः, अतसीपुष्पसमानकान्तिः, मुनिजनमनोरूपचातकानां शरण्यः, दयारसपूर्णः कालमेघसदृशः आसीत् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम् लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम् कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- ददर्श – "दृशिर् वीक्षणे" – लिट्, प्रथम.१
- सतापघ्नम् – सन्तापं हन्ति – उपपदसमासः । सन्ताप-हन् + टक् (कृत्)। अकारान्तः पुं २.१
- सकलजगताम् – सकलानि जगन्ति, तेषाम् । तकारान्तः, नपुं, ६.३
- शार्ङ्गचापाभिरामम् – शार्ङ्गम् इति चापः, शार्ङ्गचापेन अभिरामः, तम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम् लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम् कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- लक्ष्मी... – लक्ष्मीः एव विद्युत्, लक्ष्मीविद्युता लसितः, तम् । "तडित् सौदामिनी विद्युत्" (अमरः)
- अतसी... – अतस्याः गुच्छम्, अतसीगुच्छेन समाना छाया यस्य सः । अतसी...सच्छायः कायः यस्य सः, तम् । "छाया त्वनातपे कान्तौ" (वैज.)
- वैकुण्ठाख्यम् – वैकुण्ठः आख्या यस्य सः, तम् । "विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः" (अमरः)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम् लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम् कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- मुनिजन.. – मुनयः जनाः, मुनिजनानां मनांसि, मुनिजनमनांसि एव चातकाः, तेषाम् । "सर्वसहापतितमम्बु न चातकानाम्" ।
- शरण्यम् – शरणे साधुः – शरण + यत् (तद्धितः)
- कारुण्यापम् – कारुण्यम् आपः यस्य सः । समासः अकारान्तः ।
- त्रिदशपरिषत् – त्रिदशानां परिषत् । दकारान्तः, स्त्री, १.१ । "अमरा निर्जरा देवाः त्रिदशा विबुधाः सुराः" । "समज्या परिषद् गोष्ठी सभा-समिति-संसदः"

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामम् लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यम् कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥

- कालमेघम् – कालः मेघः, तम् ।
- रूपकालङ्कारः । अतसीगुच्छसच्छाय इति उपमा । अनुप्रासः ।
- मन्दाक्रान्ता वृत्तम् । "मन्दाक्रान्ता जलधिषडगैः म्भौ नतौ तो गुरू चेत्"
  (४+६+७ = १७ प्रतिपादम्, म-भ-न-त-त गणाः, गुरुः, गुरुः)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः
कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे
निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥ १४ ॥

- क्षीर-अम्भोधेः, जठरम्, अभितः, देह-भासाम्, प्ररोहैः, काल-उन्मीलत्-कुवलय-दल-अद्वैतम्, आपादयन्तम्, आतन्वानम्, भुजग-शयने, कामपि, क्षौम-गौरे, निद्रा-मुद्राम्, निखिल-जगती-रक्षणे, जागरूकाम्

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥१४ ॥

- ‘त्रिदशपरिषत् ददर्श’ इति पूर्वश्लोकात् अनुवर्तते । कुलकम् ।
- विष्णुम् इत्यध्याहारः ।
- कीदृशं विष्णुं ददर्श? आपादयन्तम् = सम्पादयन्तम्
- किम् आपादयन्तम्? काले = चन्द्रोदयकाले, उन्मीलन्ति = विकसन्ति, यानि कुवलयदलानि = नीलोत्पलपत्राणि, तैः अद्वैतम् = अभेदम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने काममपि क्षौमगौरे निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥१४ ॥

- कुत्र आपादयन्तम्? क्षीराम्भोधेः = दुग्धसमुद्रस्य जठरम् = मध्यभागम्
  अभितः = समन्तात्
- कथम् आपादयन्तम्? देहभासाम् = निजशरीरकान्तीनाम् प्ररोहैः = अङ्कुरैः
- स्वस्य देहकान्तेः किरणैः क्षीरसमुद्रस्य नीलवर्णतां जनयन् इत्यर्थः ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥१४ ॥

- पुनः कीदृशं ददर्श? आतन्वानम् = प्रदर्शयन्तम्
- किम् आतन्वानम्? निद्रामुद्राम् = योगनिद्रावस्थाम्
- कीदृशीं निद्रामुद्राम्? निखिलजगतीनाम् = समस्तलोकानाम्, रक्षणे = पालने, जागरूकाम् = जाग्रतीम्
- कामपि = अपूर्वाम्, अनिर्वाच्याम्, लोकविलक्षणत्वात्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने काममपि क्षौमगौरे निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥१४ ॥

- कुत्र आतन्वानम्? भुजगशयने = शेषपर्यङ्के
- कीदृशे भुजगशयने? क्षौमगौरे = दुकूलवत् शुभ्रे
- आदिशेषस्योपरि योगनिद्रारतः महाविष्णुः वस्तुतो लोकानां पालनतत्पर एव इत्यर्थः ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने काममपि क्षौमगौरे निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥१४ ॥

- अन्वयः – देहभासां प्ररोहैः क्षीराम्भोधेः जठरम् अभितः कालोन्मीलत्कुवलयदलाद्वैतम् आपादयन्तम्, क्षौमगौरे भुजगशयने निखिलजगतीरक्षणे जागरूकां कामपि निद्रामुद्राम् आतन्वानं (त्रिदशपरिषत् ददर्श)
- तात्पर्य्यम् – देवानां समूहः क्षीरसमुद्रस्य मध्यभागे दुकूलवत् शुभ्रशरीरस्य आदिशेषस्योपरि शयानं महाविष्णुम् अद्राक्षीत् । विष्णोः इन्द्रनीलसन्निभस्य देहस्य कान्त्या क्षीरसमुद्रस्य मध्यभागे कुवलयदलानि विकसितानि इव नीलत्वम् आसीत् । किञ्च, विष्णुः योगनिद्रायां निरतः सन्नेव सर्वेषां लोकानां पालनं करोति स्म ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥१४ ॥

- क्षीराम्भोधेः – क्षीरस्य अम्भोधिः, तस्य । इकारान्तः, पुं, ६.१ ।
- जठरम् अभितः – 'अभितः-परितः-समया-निकषा-हा-प्रतियोगेऽपि' इति वार्त्तिकेन द्वितीयाविभक्तिः
- देहभासाम् – देहस्य भासः, तासाम् । सकारान्तः, स्त्री, ६.३ । "स्युः प्रभा रुक् रुचिः त्विट् भा भास्-छवि-द्युति-दीप्तयः" (अमरः)
- प्ररोहैः – अकारान्तः, पुं, ३.३

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥१४ ॥

- कालोन्मीलत्... – काले उन्मीलन्ति, कुवलयस्य दलानि, कालोन्मीलन्ति कुवलयदलानि, कालोन्मीलत्कुवलयदलानाम् अद्वैतम्
- आपादयन्तम् – आ + “पद गतौ” + णिच् + शतृ (कृत्) – पुं, २.१
- आतन्वानम् – आ + “तनु विस्तारे” + शानच् (कृत्) – पुं, २.१
- भुजगशयने – भुजगः एव शयनम्, तस्मिन् । “सर्पः पृदाकुः भुजगः” (अमरः)

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥१४ ॥

- क्षौमगौरे – क्षौमः इव गौरम्, तस्मिन् । अकारान्तः, नपुं, ७.१
- निद्रामुद्राम् – निद्रायाः मुद्रा, ताम् ।
- निखिलजगतीरक्षणे – निखिलाः जगत्यः, निखिलजगतीनां रक्षणम्, तस्मिन् । "जगती लोको विष्टपं भुवनं जगत्" (अमरः)
- जागरूकाम् – "जागृ निद्राक्षये" + ऊक (कृत्), आकारान्तः, स्त्री, २.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥१४ ॥

- पूर्वार्धे तद्गुणालङ्कारः – “तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः” । क्षीरं स्वस्य धवलतां परित्यज्य विष्णोः नीलवर्णं स्वीकरोति ।
- उत्तरार्धे विरोधाभासः – “आभासत्वे विरोधस्य विरोधाभास उच्यते”
- मन्दाक्रान्ता वृत्तम् ।

# सङ्क्षेपः

- तदनु हविराहरणाय - इन्द्रादयो देवाः ब्रह्माणं पुरस्कृत्य वैकुण्ठं गच्छन्ति
- सन्तापघ्नम् – कालमेघसदृशस्य महाविष्णोः वर्णनम्
- क्षीराम्भोधेः – नीलकायस्य, योगनिद्रानिलीनस्य महाविष्णोः वर्णनम्






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in

